॥ श्रीशनिनामस्तुतिः ॥

क्रोडं नीलाञ्जनप्रख्यम् नीलवर्णसमस्रजम् ।
छायामार्तण्डसम्भूतं नमस्यामि शनैश्चरम् ॥

नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णाञ्जनमेचकाय ।
श्रुत्वा रहस्यं भवकामदश्च फलप्रदो मे भव सूर्यपुत्र ॥

नमोऽस्तु प्रेतराजाय कृष्णदेहाय वै नमः ।
शनैश्चराय क्रूराय शुद्धबुद्धिप्रदायिने ॥

॥ फलश्रुतिः ॥

य एभिर्नामभिः स्तौति तस्य तुष्टो भवाम्यहम् ।
मदीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति ॥

॥ श्रीभविष्यपुराणे श्रीशनिनामस्तुतिः सम्पूर्णा ॥